चमत्कारचिन्तामणिः भत्तनारायणकृतः

ओंसर्वविघ्नहर्त्रे श्रीगनेशायनमः ।
श्रीसूर्यादिनवग्रहेभ्योनमः ।
अथ मालवियदय्वज्ञधर्मेश्वरकृत अन्वयार्थप्रबोधप्रदीपटीकासहित
श्रीनारायणभत्त-कृत चमत्कार-चिन्तामणिः
श्रीदुर्गाशरणाख्या मणिप्रभाटीका-टिप्पणी सम्पादकीया
अथ ग्रन्थकर्तुः भत्तनारायणस्य मंगलाचरणम् -
लसत् पीतपट्टाम्बरं कृष्णचन्द्रं मुदाराधयाऽलिङ्गतं विद्युतेव ।
धनं सम्प्रणभ्यात्र नारायणाख्यः चमत्कारचिन्तामणिं सम्प्रवक्ष्ये ॥ १॥

क्वणत् किंकिंणीजाल कोलाहलाढ्यं लसत् पीतवासोवसानं चलंतम् ।
यशोदांगणे योगिनामप्यगम्यं भजेऽहं मुकुन्दं धनश्यामवर्णम् ॥ २॥

चतुर्लक्षज्योतिर्महांबोधिमुच्चैः प्रमध्यैव विद्वद्जनानन्दहेतोः ।
परं युक्तिरम्यं सुसंक्षिप्तशब्दं भुजंगप्रयातैः प्रबन्धं करोमि ॥ ३॥

न चेत् खेचराः स्थापिताः किं भचक्रे न चेत् स्पष्टगाः स्थापिताः किं ग्रहेन्द्रैः ।
अभावोदिता स्पष्टाकोऽत्रहेतुः फलैरेवपूर्वं ब्रुवे तानि तस्मात् ॥ ४॥

अथ सूर्यफलम् -
तनुस्थो रविः तुंगयष्टिं विधत्ते मनः संतपेत् दारदायादवर्गात् ।
वपुः पीड्यते वातपित्तेन नित्यंस वै प्रयटन् ह्रासवृद्धिं प्रयाति ॥ १॥

धनभाव -
धने यस्य भानुः स भाग्याधिकः स्यात् चतुष्पात् सुखं सद्व्यये स्वं च याति ।
कुटुम्बे कलिः जायया जायतेऽपि क्रिया निष्फला याति लाभस्य हेतोः ॥ २॥

तृतीय भाव फल -
तृतीये यदोऽहर्मणिर्जन्मकाले प्रतापाधिकं विक्रमं चाऽ।तनोति ।
तदा सोदरैस्तप्यते तीर्थचारी सदोऽरिक्षयः संगरे शं नरेशात् ॥ ३॥

चतुर्थभावफल -
तुरीये दिनेशेऽतिशोभाधिकारी जनः संल्लभेत् विग्रहे बंधुतोऽपि ।
प्रवासी विपक्षाहवे मानभङ्गं कदाचिन्न शान्तं भवेत् तस्य चेतः ॥ ४॥

पंचमभाव -
सुतस्थानगे पूर्वजन्मापत्यतापी कुशाग्रामतिः भास्करे मंत्रविद्या ।
रतिः वंचने संचकोऽपि प्रमादी मृतः क्रोडरोगादिजा भावनीया ॥ ५॥

षष्ट्ःअभाव -
रिपुध्वंसकृद्भास्करो यस्य षष्ठे तनोति व्ययं राजतो मित्रतोऽपि ।
कुले मातुरापद् चतुष्पादतोवा प्रयाणे निषादैः विषादं करोति ॥ ६॥

सप्तमभाव -
द्युनाथो यदा द्युनजातो नरस्य प्रियातापनं पिडपीडा च चिन्ता ।
भवेत् तुच्छलब्धिः क्रयेविक्रयेऽपि प्रतिस्पर्धया नैति निद्रांकदाचित् ॥ ७॥

अष्टमभाव -
क्रिया लम्पटं त्वष्टमे कष्टभाजं विदेशीयदारान् भजेद् वाप्यवस्तु ।
वसुक्षीणता दस्यु तो वा विलम्वाद् विपद् गुह्यतां भानुरुग्रां विधत्ते ॥ ८॥

नवमभाव -
दिवानायके दुष्टा कोणयाते न चाप्नोति चिंता विरामोऽस्य् चेतः ।
तपश्चर्ययाऽनिच्छयाऽपि प्रयाति क्रियातुंगतां तप्यते सोदरेण ॥ ९॥

दशमभाव -
प्रयार्तोऽशुभान् यस्य मेषूरणेऽस्य श्रमः सिधिदो राजतुल्यो नरस्य ।
जन्न्यास्तथा यातनामातनोतिक्लमः संक्रमेत् बल्लभैः विप्रयोगः ॥ १०॥

एकादशभाव -
रवौ संल्लभेत् स्वं च लाभोपयाते नृपद्वारतो राजमुद्राधिकारात् ।
प्रतापानले शत्रवः सम्पतन्ति श्रियोऽनेकधा दुःखमङ्गोद्भवानाम् ॥ ११॥

द्वादशभाव -
रविर्द्वादशे नेत्रदोषं करोति विपक्षाहवे जायतेऽसौ जयश्रीः ।
स्थितिर्लब्धया लीयते देहदुःखं पितृव्यापदो हानिरध्वप्रदेशे ॥ १२॥

अथ चन्द्रफल
प्रथमस्थान का चन्द्र
विधुर्गोकुलीराजगः सन् वपुस्थो धनाध्यक्षलावण्यमानंदपूर्णम् ।
विधते धनं क्षीणदेहं दरिद्रं जडं श्रोत्रहीनं शेषलग्ने ॥ १॥

द्वितीयभाव का चन्द्र -
हिमांशौ वसुस्थानगे धान्यलाभः शरीरेऽतिसौख्यं विलासोऽगनानाम् ।
कुटुम्बे रतिः जायते तस्य तुच्छं वशं दर्शने याति देवांगनाऽपि ॥ २॥

तृतीयभाव का चन्द्र -
विधौ विक्रमे विक्रमेर्णैति वित्तं तपस्वी भवेद्धामिनी रंजितोऽपि ।
कियच् चिंतयेत् साहजं तस्यशर्म प्रतापोज्ज्वलो धर्मिणो वैजयन्त्या ॥ ३॥

अथ चतुर्थ चन्द्र फल -
यदा बंधुग वान्धवैरत्रिजन्मा नृपद्वारि सर्वाधिकारी सदैव ।
वयस्यादिमे तादृशं नैव सौख्यं सुतस्त्रीगणात् तोप मायाति सम्यक् ॥ ४॥

अथ पञ्चम चन्द्र फल -
यदा पञ्चमे यस्य नक्षत्रनाथो ददातीह संतानसंतोषमेव ।
मतिनिर्मलां रत्नलाभं च भूमिं कुसीदेन नानाप्तयो व्यावसायात् ॥ ५॥

अथ छठे भाव में चन्द्र का फल -
रिपौ राजते विग्रहेणाऽपि राजा जितास्तेऽपि भूयो विधौ संभवन्ति ।
तदग्रेऽरयोनिष्प्रभा भूयसोऽपि प्रतापोज्वलो मातृशीलोनतद्वत् ॥ ६॥

अथ सप्तम चन्द्र फल -
ददेद् दारशं सप्तमे शीतरश्मिः धनित्वं भवेद्ध्ववाणिज्यतोऽपि ।
रतिं स्त्रीजने मिष्टभुक् लुब्धचेताः कृशः कृष्णपक्षे विपक्षाभिभूतः ॥ ७॥

अष्टमभावस्थित चन्द्र का भावफल -
सभा विद्यते भैषजी तस्यगेहे पचेत् कर्हिचित् क्वाथमुद्गोदकानि ।
महाव्याधयो भीतयो वारिभूताः शशीक्लेशकृत् संकटान्यष्टमस्थः ॥ ८॥

नवमभावस्थित चन्द्र का फलः -
तपोभावगस्तारकेशो जनस्य प्रजाश्च द्विजाः वेदिनः तं स्तुवन्ति ।
भवत्येव भाग्याधिको यौवनादेः शरीरे सुखं चन्द्रवत् साहसं च ॥ ९॥

दशमभावस्थित चन्द्रफल -
सुखं वान्धवेभ्यः खगे धर्मकर्मा समुद्रांगजेशं नरेशादितोऽपि ।
नवीनांगना वैभवे सुप्रियत्वं पुरा जातके सौख्यमल्पं करोति ॥ १०॥

एकादशभावस्थित चन्द्रफल -

लभद् भूमिपादिदुना लभगेन प्रतिष्ठाधिकाराम्बराणि क्रमेण ।
श्रियोऽथस्त्रियोऽन्तःपुरे विश्रमन्ति क्रिया वैकृती कन्यका वस्तुलाभः ॥ ११॥

द्वादशभावस्थित चन्द्रफल -
शशी द्वादशे शत्रुनेत्रादिचिंता विचिंत्या सदा सद्व्ययो मंगलेन ।
पितृव्यादि मात्रादितोऽन्तविषादो न चाप्नोति कामं प्रियाल्पप्रियत्वम् ॥ १२॥

अथ भौमस्य लग्नादि द्वादशभाव फलम्
विलग्ने कुजे दण्डलोहाग्निभीतिस्तपेन् मानसं केसरी किं द्वितीयः ।
कलत्रादिघतः शिरोनेत्रपीडा विपाकेफलानां सदैवोपसर्गः ॥ १॥

भवेत्तस्य किं विद्यमाने कुतुम्बे धनेऽङ्गारके यस्य लब्धे धने किम् ।
यथा त्रायते मर्कटः कंठहारं पुनः सम्भुखं को भवेद् वादभग्नः ॥ २॥

कुतो बाहुवीर्यं कुतो बाहुलक्ष्मीस्तृतीयो न चेन् मङ्गलो मानवानाम् ।
सहोत्थव्यथा भण्यते केन नेषां तपश्चर्यया चोपहास्यः कथं स्यात् ॥ ३॥

यदा भूसुतः संभवेत्तुर्यभावे तदा किं ग्रहाः सानुकूला जनानाम् ।
सुहृद्वर्गसौख्यंनकिञ्चित् विचिन्त्यं कृपावस्त्रभूमीः लभेद्भूमिपालात् ॥ ४॥

कुजे पंचम जाठराग्निर्वलीयान् न जातं न जांत निहन्त्येक एव ।
तदानीमनल्पा मतिः किल्विषेऽपि स्ययं दुग्धवत् तप्यतेऽन्तः सदैव ॥ ५॥

न तिष्ठन्ति षष्ठेऽरयोऽंगारके वै तदंगैरिताः संगरे शक्तिमन्तः ।
मनीषी सुखी मातुलेयो न तद्वन् विलीयेत वित्तं लभेत्तापि भूरि ॥ ६॥

अनुद्धारभूतेन पाणिग्रहेण प्रयाणेन वाणिज्य तो नो निवृत्तिः ।
मुहुर्भगदः स्पर्धिनां मेदिनीजः प्रहारार्दनैः सप्तमे दम्पतिघ्नः ॥ ७॥

शुभास्तस्य किं खेचराः कुर्युरन्ये विधानेऽपिचेदष्टमे भूमिसूनुः ।
सखा किं न शत्रुयते सत्कृतोऽपि प्रयत्नेकृते भूयते चोपसर्गेः ॥ ८॥

महोग्रा मतिर्भग्यवित्तं महोग्रं तपोभाग्यगो मंगलस्तत् करोति ।
भवेन्नादियः श्यालकः सोदरो वा कुतो विक्रमस्तुच्छलाभे विपाके ॥ ९॥

कुले तस्य किं मंगलं मंगलोनो जनैर्भूयते मध्यभावे यदि स्यात् ।

स्वतः सिद्ध एवावतंसीयतेऽसौ वराकोऽपि कण्ठीरवः किं द्वितीयः ॥ १०॥

कुजः पीडयेल्लाभगोऽपत्यशत्रुन् भवेत् संमुखो दुर्मुखोऽपिप्रतापात् ।
धनं वर्धते गोधनैः वाहनैर्वा सकृच्छून्यतार्थे च पैशुन्यभावात् ॥ ११॥

शताक्षोऽपि तत् सक्षतो लोहघानैः कुजो द्वादशोऽर्थस्य नाशं करोति ।
मृपा किंवदंती भयं दस्युतो वा कलिः पारधी हेतु दुःखं विचिंत्यम् ॥ १२॥

अथ बुधस्य लग्नादि द्वादशभावफलम् -
बुधो मूर्तिगो मार्जयेदन्यरिष्टंवरिष्टाधिया वैखरी वृत्तिभाजः ।
जना दिव्यचामीकरीभूतदेहाश्चिकित्साविदो दुश्चिकित्स्या भवन्ति ॥ १॥

धने बुद्धिमान् बोधने बाहुतेजाः सभासंगतो भासते व्यास एव ।
पृथूदारता कल्पवृक्षस्य तद्वद् बुधैर्भण्यते भोगतः षट्पदोऽयम् ॥ २॥

तृतीय भाव -
वणिञ्चित्रता पण्यकृद्वृत्तिशीलो वशित्वं धियो दुर्वशानामुपैति ।
विनीतोऽतिभोगं भजेत् संन्यसेद्वा तृतीयेऽनुजैराश्रितो ज्ञे लताबान् ॥ ३॥

चतुर्थभाव
चतुर्थे चरेत् चन्द्रजश्चारु मित्रो विशेषाधिकृद् भूमिनाथो गणस्य ।
भवेल् लेखको लिख्यते वा तदुक्तं तदाशापरः पैतृकं नो धनं च ॥ ४॥

पञ्चमभाव
वयस्यादिमे पुत्रगर्भो न तिष्ठेत् भवेत् तस्य मेधाऽर्थसंवादयित्री ।
बुधैर्भण्यते पञ्चमे रोहिणेये कियद् विद्यते कैतवस्याभिचारम् ॥ ५॥

षष्ट्ःअभाव -
विरोधो जनानां निरोधो रिपुणां प्रबोधो यतीनां च रोधोऽनिलानां ।
बुधे सद्व्यये व्यावहारो निधीनां बलादर्थकृत् संभवेच्छत्रुभावे ॥ ६॥

सप्तमभाव -
सुतः शीतगोः सप्तमे शं युवत्या विधत्ते तथा तुच्छ वीर्यं च भोगे ।
जतस्तं गतो हेमवद् देहशोभां न शक्नोति सत्सम्पदो वानुकर्तुम् ॥ ७॥

अष्टमभाव -

शतंजीविनो रंध्रगे राजपुत्रे भवन्तीह देशान्तरे विश्रुतस्ते ।
निधानं नृपद् विक्रयाद् वा लभन्ते युवत्युद्भवं क्रीडनं प्रीतिमन्तः ॥ ८॥

नवमभाव -
बुधे धर्मगे धर्मशीलोऽतिधीमान् भवेद् दीक्षितः स्वर्धुनीस्नातकोवा ।
कुलोद्योतकृद्धानुवद भूमिपालात् प्रतापाधिको वाधको दुर्मुखानाम् ॥ ९॥

दशमभाव -
मितं संवदेन्नो मितं मंलभेत् प्रमादादिवैकारि सौराजवृत्तिः ।
बुधे कर्मगे पूजनोयो विशेपात् पितुः सम्पदो नीतिदण्डाधिकारात् ॥ १०॥

एकादशभाव -
विना लाभभावस्थितं भेशजातं न लाभो न लावण्यमानृण्यमस्ति ।
कुतः कन्यकोद्वाहदानं च देयं कथं भूसुरास्त्यक्ततृष्णा भवन्ति ॥ ११॥

द्वादशभाव -
न चेद् द्वादशे यस्य शीतांशुजातः कथं तद्गृहं भूमिदेवा भजन्ति ।
रणे वैरिणो भीतिभायान्ति कस्माद् हिरण्यादिकोशं शठः कोऽनुभूयात् ॥ १२॥

अथ गुरोः लग्नादि द्वादशभावफलम् -
गुरुत्वं गुणैर्लग्नगे देवपूज्ये सुवेशी शुखी दिव्यदेहोऽल्पवीर्यः ।
गतिर्भाविनी पारलोकी विचिन्त्या वसूनि व्ययं संबलेन ब्रजन्ति ॥ १॥

द्वितीयभावस्थ गुरुफलम्
कवित्वेमतिः दंडनेतृत्वशक्तिः मुखे दोषधृक् शीघ्रभोगार्त एव ।
कुतुम्बे गुरौ कष्टतो द्रव्यलब्धिः सदा नो धनं विश्रमेद् यत्नतोऽपि ॥ २॥

तृतीयभावस्थ गुरुफल -
भवेद् यस्य दुश्चिक्यगो देवमंत्री लघूनां लघीयान् सुखं सोदरा नाम् ।
कृतघ्नो भवेत् मित्र सार्थे न मैत्रि ललाटोदयेऽप्यर्थलाभो न तद्वत् ॥ ३॥

चतुर्थभावस्थ गुरुर्फल -
गृहद्वारतः श्रियते वाजिह्वेषा द्विजोच्चारितो वेदघोषोऽपि तद्वत् ।
प्रातिस्पर्द्धिनः कुर्वते पारिचार्य्यं चतुर्थे गुरौ सप्तमन्तर्गतंच ॥ ४॥

पंचमभावगत गुरु का फल -

विलासे मतिः बुद्धिगेदेवपूज्ये भवेज्जल्पकः कल्पको लेखको वा ।
निदाने सुते विद्यमानेऽति भूतिः फलोपद्रवः पक्वकाले फलस्य ॥ ५॥

षष्ठमस्थ गुरुफलम् -
रुजार्तो जनन्या रुजः संभवेयू रिपौ वाक्पतौ शत्रुहंतृत्वमेति ।
वलादुद्धतः को रणे तस्य जेता महिष्यादिशर्मा न तन् मातुलानाम् ॥ ६॥

सप्तमभावस्थ गुरुफलम् -
मतिः तस्यबह्वी विभूतिश्चवह्वी रतिर्वैभवेद्भामिनीमवह्वीः ।
गुरुर्वर्गकृद् यस्य जामित्रभावे सम्पिडाधिकोऽखंड कंदर्प एव ॥ ७॥

अष्टमभावस्थ गुरुर्फलम् -
चिरं नो वसेत् पैतृके चैवगेहे चिरस्थायिनो तद्गृहं तस्य देहम् ।
चिरं नो भवेत् तस्य नीरोगभंगं गुरुर्मृत्यगो तस्य वैकुंठगता ॥ ८॥

नवमभावस्थितगुरुफलम् -
चतुर्भूमिकं तद्गृहं तस्य भूमिपतेर्वल्लभोवल्लभा भूमिदेवाः ।
गुरौ धर्मगे बान्धवाः स्युर्विनीताः सदालस्यतोधर्मवैगुण्यकारी ॥ ९॥

दशमस्थगुरुफलम् -
ध्वजामंडपे मंदिरे चित्रशाला पितुः पूर्वजेभ्योऽपि तेजोऽधिकत्वम् ।
न तुष्टोभवेच्छ्मणा पुत्रकाणो पचेत् प्रत्यहं प्रस्थसामुद्रमन्नम् ॥ १०॥

एकादशभावस्थगुरुफलम् -
अकुप्यं च लाभे गुरौ किं न लभ्यं वदन्त्यष्टधीमन्त मन्ये मुनीन्द्राः ।
पितुः भारभृतः स्वांगजास्तस्य पंच परार्थस्तदर्थो न चेद् वैभवाय ॥ ११॥

द्वादशस्थगुरुर्फलम् -
यशः कीदृशं सद्व्यये साभिमाने मतिः कीदृशी वंचनाचेत् परेषाम् ।
विधिः किदशोऽर्थस्त्य नाशो हि यने त्रयस्ते भवेयुः व्यये यस्य जीवः ॥ १२॥

प्रथमभावस्थ शुक्रफल -
समीचीनमंगं समीचीनमंगः ममीचीनवह्वंगना भोग युक्तः ।
समीचीनकर्मा समीचीनशर्मा समीचीन शुक्रो यदालग्नवर्ती ॥ १॥

द्वितीयभावगत शुक्रफल -

मुखं चारुभापं मनीषापि चार्विं मुखं चारु चारूणि वासांसि तस्य ।
कुटुम्बे स्थितः पूर्वदेवस्य पूज्यः कुटुम्बेन चारु चार्वगिकामः ॥ २॥

तृतीयभाव गतशुक्र का फल -
रतिः स्त्रीजने तस्य नो बंधुनाशो गुरुर्यस्य दुशिक्यगो दानवानाम् ।
न पूर्णो भवेत् पुत्रसौख्येऽपि सेनापतिः कातरो दानसंग्रामकाले ॥ ३॥

चतुर्थभाव का शुक्रफलः -
महित्वेऽधिको यस्य तुर्येऽऽसुरेज्यो जनैः किं जनैश्चापरैरुष्ट तुष्टैः ।
कियत् पोषयेत् जन्मतः संजनन्या अधीनापि तोपायनैरेव पूर्णः ॥ ४॥

पञ्चमभाव का शुक्रफल -
सपुत्रेऽपि किं यस्य शुक्रो न पुत्रे प्रयासेन किं यत्नसम्पादितोऽर्थे ।
व्युदर्कं विना मन्त्रमिष्टाशनाभ्यामधीतेन किं चेत् कवित्वेन शक्तिः ॥ ५॥

षष्ठभावगत शुक्र का फल -
सदा दानवेज्ये सुधासिक्त शत्रुः व्ययः शत्रुगे चौत्तमौ तौ भवेताम् ।
विपद्येत सम्पादितं चापिकृत्यं तपेत् मन्त्रतः पूज्यसौख्यं न धत्ते ॥ ६॥

सप्तमभावगत शुक्र का फल -
कलत्रे कलत्रात् सुखं नोकलत्रात् कलत्रं तु शुक्रे भवेत् रत्नगर्भम् ।
विलासाधिको गण्यते च प्रवासी प्रयासात्पकः के न मुह्यति तस्मात् ॥ ७॥

अष्टमभावगत् शुक्र का फल -
जनः क्षुद्रवादी चिरंचारु जीवेत् चतुष्पात् सुखं दैत्यपूज्यो ददाति ।
जनुष्यष्टमे कष्टसाध्योजयार्थः पुनः वर्धते दीयमानं धनर्णम् ॥ ८॥

नवमभावस्थित शुक्र का फल -
भृगौत्रिकोणे पुरे के न पौराः कुमिदेन ये वृद्धिमस्मै ददीरन् ।
गृहज्ञाय्ते तस्यधर्मध्वजादेः सहोत्थादि सौख्यं शरीरे सुखं च ॥ ९॥

दशमभावगत शुक्र का फल -
भृगुः कर्मगोगोत्रवीर्यं । गोत्रबीजं । रूणद्धि क्षयार्थोभ्रमः किन्न आत्मीय एव ।
तुलामानतो हाटकं विप्रवृत्या जनाडम्बरैः प्रत्यहं वा विवादात् ॥ १०॥

एकादशभावस्थित शुक्र के फल -
भृगुः लाभगो यस्य लग्नात् सुरूपं महीपं च कुर्य्यच्च सम्यक् ।
लसत् कीर्ति सत्यानुरागं गुणाढ्यं महाभोगमैश्वर्ययुक्तम् सुशीलम् ॥ ११॥

व्ययस्थानगत शुक्र के फल -
कदाप्येति वित्तं विलीयेत् पित्तं सितो द्वादशे केलिसत्कर्म शर्मा ।
गुणानां च कीर्तेः क्षयं मित्रवैरं जनानां विरोधं सदोऽसौ करोति ॥ १२॥

शनेः लग्नादिद्वादशभावफलम्

शनि के प्रथमस्थान के फल -
धनेनातिपूर्णोऽतितृष्णो विवादी तनुस्थेऽर्कजे स्थूलदृष्टिर्नरः स्यात् ।
विपं दृष्टिजं स्वाधिकृत्व्याधिवाधाः स्वयं पीडितो मत्सरावेश एव ॥ १॥

धनभावस्थ शनि के फल -
सुखापेक्षया वर्जितोऽसौ कुटुम्बात् कुटुम्बे शनौ वस्तु कि किन भुक्ते ।
समं वक्ति मित्रेण तिक्तं वचोऽपि प्रसक्ति विना लोहकं को लभेत् ॥ २॥

तृतीयभावस्थ शनि के फल -
तृतीये शनौ शीतलं नैव चित्तांजना दुद्यभाज्जायते युक्तमापी ।
अविघ्नं भवेत् कर्विचिन्नैवभाग्यं दृढाशः सुखी दुर्मुखः सत्कृतोऽपि ॥ ३॥

चतुर्थभावस्थ शनि के फल -
चतुर्थे शनौ पैकृतं याति दूरं धनं मंदिरं बंधुवर्गापवादः ।
पितुश्चापि मातुश्च संतापकारी गृहे वाहने हानयो वातरोगी
पऽम्च भावस्थ शनि के फल -
शनौ पञ्चमे च प्रजा हेतु दुःखी विभूतिचला तस्यबुद्धिर्न शुद्धा ।
रति दैवते शब्दशास्त्रे न तद्वत् कलिर्मित्रतो मन्त्रतः क्रोडपीडा ॥ ५॥

षष्ठथान के शनि के फल -
अरेर्भूपतेश्चौरतो भीतयः कि यदिनस्य पुत्रो भवेद् यस्य शत्रौ ।
न युद्धे भवेत्संमुखे तस्य योद्धा महिष्यादिकं मातुलानां विनाशः ॥ ६॥

सप्तमस्थान मे शनि के फल -
सुदारा न मित्रं चिरं चारु वित्तं शनौ द्युनगे दम्पती रोगयुक्तौ ।
अनुत्साहसन्तप्तकृद् हीनचेताः कुतोवीर्यवान् विह्वलो लोलुपः स्यात् ॥ ७॥

अष्टमस्थान मे शनि के फल -
वियोगो जनानां त्वनौपाधिकानां विनाशो धनानां स को यस्य न स्यान् ।
शनौ रंध्रगे व्याधितः क्षुद्रदर्शी तदग्रे जनः कैतवं कि करोतु ॥ ८॥

नवमस्थान में शनि के फल -
मतिस्तस्यत्तिक्ता न तिक्तं सुशीलं रतिर्योगशास्त्रे गुनोराजसः स्यात् ।
सुहृद्वर्गतो दुःखितो दीनबुद्ध्या शनिः धर्मगः कर्मकृत् संन्यसेद्वा ॥ ९॥

दशमस्थान मे शनि के फल -
अजातम्य मातापिता बाहुरेव वृथा मर्वतो दुष्ट कर्माधिपत्यात् ।
शनैरेहने कर्मगः शर्म मंदो जये विग्रहे जीविकानां तु यस्य ॥ १०॥

लाभभावगत शनि के फल -
स्थिरं वित्तमायुः स्थिरं मानमं च स्थिरा नैव रोगादयो न स्थिराणि ।
अपत्यानि शूरः शतादेक एव प्रपंचाधिको लाभगे भानुपुत्रे ॥ ११॥

व्ययस्थान मे शनि के फल -
व्ययस्थे यदा सूर्यसूनौ नरः स्यादशूरोऽथवा निस्त्रयो मंदनेत्रः ।
प्रसन्नो वहिः नोगृहे लग्नपश्चेद् व्ययस्थोरिपुध्वंसकृद् यग़्यभोक्ता ॥ १२॥

राहु के द्वादशभाव् फल -
स्ववाक्ये समर्थः परेषां प्रतापात् प्रभावात् समाच्छादयेत् स्वान् परार्थान् ।
तमोयस्य लग्ने स भग्नारिवीर्यः कलत्रेऽधृति भूरिदारोऽपि यायात् ॥ १॥

धनभावगत राहु के फल -
कुटुंबे तमो नष्टभूतं कुटुंबं मृषाभाषिता निर्भयो वित्तपालः ।
स्ववर्गप्रणाशो भयंशस्त्रतः चेदवश्यं खलेभ्यो लभेत् पारवश्यम् ॥ २॥

तृतीय भावस्थ राहु के फल -
न नागोऽथ सिंहो भुजाविक्रमेण प्रयाती ह सिंही सुते तत्समत्वम् ।
तृतीये जगत्सोदरत्वं समेति प्रयातोऽपि भाग्यं कुतो यत्र हेतुः ॥ ३॥

चतुर्थभावगत राहु के फल -
चतुर्थे तथं मातृनैरुज्र्यदेहो हृदिज्वाल्या शीतलं किं वहिः स्यात् ।
स चेज्ञथा मेषगः कर्कगो वा बुधर्क्षेऽसुरो भूपतेर्वन्धुरेव ॥ ४॥

पञ्चभावगत्राहु के फल -
सुते तत्सुतोत्पति कृत् सिंहिकायाः सुतोभामिनिचिंतया चित्ततापः ।
सति क्रोडरोगे किमाहारहेतुः प्रपञ्चन किं प्रापकंदृष्टवर्ज्यम् ॥ ५॥

षष्ठभावगत राहु के फल -
वलं बुधिवीर्यं धनं तद्वशेन स्थितो वैरिभावेऽयेषां जनानाम् ।
रिपूणामरण्यं दहेदेव राहुः स्थिरं मानसं तत्तुला नो पृथिव्याम् ॥ ६॥

सप्तमभावगत राहु के फल -
विनाशंलभेयुः द्युने तद्युवत्यो रुजा  धातुपाकादिना चन्द्रमर्दी ।
कटाहे यथा लोडयेत् जातवेदा वियोगापवादाः शर्मं न प्रयान्ति ॥ ७॥

अष्टम्भावगत राहु के फल -
नृपैः पण्डितैः वन्दितोनिन्दितः सकृद्भाग्यलाभोऽसकृद् भ्रंश एव ।
धनं जातकं तं जनाश्च त्यजंति श्रमग्रन्थि कृद्रंध्रगो व्रघ्नशत्रुः ॥ ८॥

नवमभावगत राहु के फल -
मनीषी कृतं न त्यजेत् बंधुवर्गं सदा पालयेत् पूजितः याद्गुणैः स्वैः ।
सभाद्योतको यस्य चेत् त्रित्रिकोणे तमः कौतुकी देवतीर्थे दयालुः ॥ ९॥

दशमभावगत राहु के फल
सदाम्लेच्छसंसर्गतोऽतीवगर्वं लभेत् मानिनी कामिनी भोगमुच्चैः ।
जनैर्व्याकुलोऽसौ सुखं नाधिशेते मदार्थव्ययी क्रूरकर्मा खगेऽगौ ॥ १०॥

एकादशथानगत राहु के फल -
सदा म्लेच्छतोऽर्थं लभेत् साभिमानः चरेत् किंकरेण व्रजेत् किं विदेशम ।
परार्थानर्थी हरेद् धूर्तबन्धुः सुतोत्पत्तिसौख्यं तमो लाभगश्चेत् ॥ ११॥

द्वादशभावगत राहु के फल -
तमो द्वादशे दीनतांपार्श्वशूलं प्रयत्ने कृतेऽनर्थतमातनोति ।
खलैः मित्रतां साधुलोके रिपुत्वं विरामे मनोवांछितार्थस्य सिद्धिम् ॥ १२॥

केतु के द्वादशभावफल -
प्रथम स्थानस्थ केतु फल -
तनुस्थः शिखी बांधवक्लेशकर्ता तथा दुर्जनेभ्यो भयं व्याकुलत्वम् ।
कलत्रादिचिंता सदोद्वेगता च शरीरे व्यथा नैकधा मारुती स्यात् ॥ १॥

द्वितीय भावस्थित केतु फल -
धने केतुरव्यग्रता किं नरेशात् धनेधान्यनाशो मुखेरोगकृच्च ।

कुटुम्वाद् विरोधो वचाह् सत्कृतं वा भवेत् स्वेगृहे सौम्यगेहेऽतिसौख्यम् ॥ २॥

तृतीयस्थकेतु के फल -
शिखी विक्रमे शत्रुनाशं विवादं धनं भोगमैश्वर्यतेजोऽधिकं च ।
सुहृद्वर्गनाशं सदा बाहुपीडां भयोद्वेगचिंताऽकुलत्वं विधत्ते ॥ ३॥

चतुर्थस्थानगत केतु के फल -
चतुर्थे च मातुः सुखेनो कदाचित् सुहृद्वर्गतः पैतृकं नाशयेति ।
शस्त्री बन्धुवर्गात् सुखं स्वोच्चगेहे चिरं नो वसेत् स्वेगृहे व्यग्रताचेत् ॥ ४॥

पंचमस्थान के केतु का फल -
यदा पंचमे राहपुच्छं प्रयाति तदा सोदरे घातवातादिकष्टम् ।
स्वबुद्धिव्यथा संततं स्वल्पपुत्रः स दासो भवेद् वीर्ययुक्तो नरोऽपि ॥ ५॥

षष्ठभावगत केतु के फल -
तमः षष्ठभागेगते षष्ठभावे भवेत् मातुलान् मनभंगो रिपूणाम् ।
विनाशश्चतुष्पात् सुखं तुच्छवित्तं शरीरं सदानामयं व्याधिनाशः ॥ ६॥

सप्तमस्थानगत केतु का फल -
शिखी सप्तमे भूयसी मार्गचिन्ता निवृत्तः स्वनाशोऽथवा वारिभीतिः ।
भवेत् कीटगः सर्वदालाभकारी कलत्रादिपीडा व्ययोव्यग्रता चेत् ॥ ७॥

अष्टमभावगत केतु के फल -
गुदा पीड्यतेऽर्शारोगैरवश्यं भयं वाहनादेः स्वद्रव्यस्यरोधः ।
भवेदष्टमे राहुच्छेऽर्थलाभः सदा कीटकन्याऽजगो युग्मगे तु ॥ ८॥

नवमभावगत केतु के फल -
शिखी धर्मभावे यदाक्लेशनाशः सुतार्थी भवेत् म्लेच्छतोभाग्यवृद्धिः ।
सहोत्थव्यथां बहुरोगं विधत्ते तपोदानतो हास्यवृद्धिं तदानीम् ॥ ९॥

दशमभावगत केतु के फल -
पितुर्नो सुखी कर्मगः यस्य केतुः दुर्भगं कष्टभाजे करोति ।
तदा वाहने पीडितं जातु जन्म वृषाजालिकन्यासु चेत् शत्रुनाशम् ॥ १०॥

लाभ भावगत केतु के फल -
सुभाग्यः सुविद्याधिको दर्शनीयः सुगात्रः सुवस्त्रः सुतेजोऽपितस्य ।
दरे पीड्यते संततिः दुर्भगा च शिखी लाभगः सर्वलाभे करोति ॥ ११॥

व्ययस्थानगत केतु के फल -
शिखीरिःफगो वस्तिगुह्यांध्रिनेत्रे रुजापीडानं मातुलान्नैव शर्म ।
सदा राजतुल्यं सद्व्ययं तद् रिपूणां विनाशं रणेऽसौ करोति ॥ १२॥